हेमचन्द्राचार्यरचित-

# त्रिषष्टिशलाकापुरुषचरितप्रशस्तिः।

शिष्यो जम्बुमहामुनेः प्रभव इत्यासीदमुष्यापि च
श्रीशय्यंभव इत्यमुष्य च यशोभद्राभिधानो मुनिः।
संभूतो मुनिभद्रबाहुरिति च द्वौ तस्य शिष्योत्तमौ
संभूतस्य च पादपद्ममधुलिट् श्रीस्थूलभद्राह्वयः॥ १॥

वंशक्रमागतचतुर्दशपूर्वरत्नकोशस्य तस्य दशपूर्वधरो महर्षिः।
नाम्ना महागिरिरिति स्थिरतागिरीन्द्रो ज्येष्ठोऽन्तिषत् समजनिष्ट विशिष्टलब्धिः॥ २॥

शिष्योऽन्यो दशपूर्वभृन्मुनिवृषो नाम्ना सुहस्तीत्यभूद् यत्पादाम्बुजसेवनात् समुदितप्राज्यप्रबोधर्द्धिकः।
चक्रे संप्रतिपार्थिवः प्रतिपुर-ग्रामाकरं भारतेऽस्मिन्नर्द्धे जिनचैत्यमण्डितमिलापृष्ठं समन्तादपि॥ ३॥

अजनि सुस्थित-सुप्रतिबुद्ध इत्यभिधाऽऽर्यसुहस्तिमहामुनेः।
शमधनो दशपूर्वधरोऽन्तिषद् भवमहातरुभञ्जनकुञ्जरः॥ ४॥

महर्षिसंसेवितपादसन्निधेः प्रचारभागालवणोदसागरम्।
महान् गणः कोटिक इत्यभूत् ततो गाप्रवङ्गाहो हिमवद्गिरेरिव॥ ५॥

तस्मिन् गणे कतिपयेष्वपि यातवत्सु साधूत्तमेषु चरमो दशपूर्वधारी।
उद्दामतुम्बवनपत्तनवज्रखानि-वज्रं महामुनिरजायत वज्रसूरिः॥ ६॥

दुर्भिक्षे समुपस्थिते प्रलयवद्भीमत्वभाज्यन्यदा भीतं न्यस्य महर्षिसङ्घमभितो विद्यावदातः पटे।
योऽभ्युद्धृत्य कराम्बुजेन नभसा पुर्यामनैषीन्महापुर्यां मङ्क्षु सुभिक्षधामनि तपोधाम्नामसीम्नां निधिः॥७॥

तस्माद् वज्राभिधा शाखाऽभूत् कोटिकगणद्रुमे। उच्चनागरिकामुख्यशाखात्रितयसोदरा॥ ८॥

तस्यां च वज्रशाखायां निलीनमुनिषट्पदः। पुष्पगुच्छायितो गच्छश्चन्द्र इत्याख्ययाऽभवत्॥ ९॥

धर्मध्यानसुधासुधांशुरमलग्रन्थार्थरत्नाकरो भव्याम्भोरुहभास्करः स्मरकरिप्रोन्माथकण्ठीरवः।
गच्छे तत्र बभूव संयमधनः कारुण्यराशिर्यशोभद्रः सूरिरपूरि येन भुवनं शुभ्रैर्यशोभिर्निजैः॥ १०॥

श्रीमन्नेमिजिनेन्द्रपावितशिरस्यद्रौ स संलेखनां कृत्वाऽऽदौ प्रतिपन्नवाननशनं प्रान्ते शुभध्यानभाक्।
तिष्ठन् शान्तमनास्त्रयोदश दिनान्याश्चर्यमुत्पादयन्नुच्चैः पूर्वमहर्षिसंयमकथाः सत्यापयामासिवान्॥ ११॥

श्रीमान् प्रद्युम्नसूरिः समजनि जनितानेकभव्यप्रबोधस्तच्छिष्यो विश्वविश्वप्रथितगुणगणः प्रावृडम्भोदवद् यः।
प्रीणाति स्माखिलक्ष्मां प्रवचनजलधेरुद्धृतैरर्थनीरैरातत्य स्थानकानि श्रुतिविषयसुधासारसभ्यश्च विष्वक्॥१२॥

सर्वग्रन्थरहस्यरत्नमुकुरः कल्याणवल्लीतरुः कारुण्यामृतसागरः प्रवचनव्योमाङ्गणाहस्करः।
चारित्रादिकरत्नरोहणगिरिः क्ष्मां पावयन् धर्मराट् सेनानीर्गुणसेनसूरिरभवच्छिष्यस्तदीयस्ततः॥ १३॥

शिष्यस्तस्य च तीर्थमेकमवनेः पावित्र्यकृज्जङ्गमं
स्याद्वादत्रिदशापगाहिमगिरिर्विश्वप्रबोधार्यमा।
कृत्वा स्थानकवृत्ति-शान्तिचरिते प्राप्तः प्रसिद्धिं परां
सूरिर्भूरितपःप्रभाववसतिः श्रीदेवचन्द्रोऽभवत्॥ १४॥

आचार्यो हेमचन्द्रोऽभूत् तत्पादाम्बुजषट्पदः । तत्प्रसादादधिगतज्ञानसंपन्महोदयः ॥ १५ ॥

जिष्णुश्चेदि-दशार्ण-मालव-महाराष्ट्रापरान्तं कुरून्
सिन्धूनन्यतमांश्च दुर्गविषयान् दोर्वीर्यशक्त्या हरिः ।
चौलुक्यः परमार्हतो विनयवान् श्रीमूलराजान्वयी
तं नत्वेति कुमारपालपृथिवीपालोऽब्रवीदेकदा ॥ १६ ॥

पापर्द्धि-द्यूत-मद्यप्रभृति किमपि यन्नारकायुर्निमित्तं
तत् सर्वं निर्निमित्तोपकृतिकृतधियां प्राप्य युष्माकमाज्ञाम् ।
स्वामिन्नुर्व्यां निषिद्धं धनमसुतमृतस्याथ मुक्तं तथार्ह-
च्चैत्यैरुत्तंसिता भूरभवमिति समः संप्रतेः संप्रतीह ॥ १७ ॥

पूर्वं पूर्वजसिद्धराजनृपतेर्भक्तिस्पृशो याच्ञया
साङ्गं व्याकरणं सुवृत्तिसुगमं चक्रुः भवन्तः पुरा ।
मद्धेतोरथ योगशास्त्रममलं लोकाय च द्व्याश्रय-
च्छन्दो-ऽलङ्कृति-नामसङ्ग्रहमुखान्यन्यानि शास्त्राण्यपि ॥ १८ ॥

लोकोपकारकरणे स्वयमेव यूयं सज्जाः स्थ यद्यपि तथाऽप्यहमर्थयेऽदः ।
मादृग्जनस्य परिबोधकृते शलाकापुंसां प्रकाशयत वृत्तमपि त्रिषष्टेः ॥ १९ ॥

तस्योपरोधादिति हेमचन्द्राचार्यः शलाकापुरुषेतिवृत्तम्
धर्मोपदेशैकफलप्रधानं न्यवीविशच्चारुगिरां प्रपञ्चे ॥ २० ॥

जम्बूद्वीपारविन्दे कनकगिरिरसावश्नुते कर्णिकात्वं
यावद् यावच्च धत्ते जलनिधिरवनेरन्तरीयत्वमुच्चैः ।
यावद् व्योमाध्वपान्थौ तरणि-शशधरौ भ्राम्यतस्तावदेतत्
काव्यं नाम्ना शलाकापुरुषचरितमित्यस्तु जैनं धरित्र्याम् ॥ २१ ॥

# कुमारपालचरित्रसंग्रहान्तरागत-उद्धरणरूप-पद्यानामकाराद्यनुक्रमणिका ।

# कुमारपालचरित्रसङ्ग्रहान्तर्गतविशेषनाम्नां अकाराद्यनुक्रमणिका ।

## क

ह